॥ ६३५ ॥ अर्तेरुच्च ॥ ४—२०२ ॥

रपरः । उत् । व्याप्नोति **उरः** ॥

॥ ६३६ ॥ व्याधौ शुट् च ॥ ४—२०३ ॥

अर्तेर्व्याधावसुन् शुट् च । निर्गच्छति **अर्शः** ॥

॥ ६३७ ॥ उदके नुट् च ॥ ४—२०४ ॥

अर्यते पिपासुभिः **अर्णः** ॥

॥ ६३८ ॥ इण आगसि ॥ ४—२०५ ॥

असुन् नुट् च । निष्कृत्या गच्छति **एनः** ॥

॥ ६३९ ॥ रिचेर्धने घित्[1] ॥ ४—२०६ ॥

असुन् नुट् च । गुणः । घित्त्वात् "चजोः" इति कुः । **रेक्णः** धनम् ॥

॥ ६४० ॥ चायतेरन्ने ह्रस्वश्च ॥ ४—२०७ ॥

नुटि यलोपः । **चनः** ॥

॥ ६४१ ॥ वृङ्शीभ्यां रूपस्वाङ्गयोः पुट् च ॥ ४—२०८ ॥

**वर्पः** रूपम् ॥ शेते **शेपः** मेढ्रम् । अदन्तः प्रागुक्तः ॥

॥ ६४२ ॥ स्रुरीभ्यां तुट् च ॥ ४—२०९ ॥

स्रवति **स्रोतः** ॥ रीयते स्रवति **रेतः** ॥ "यातेर्दुक् च" इति भोजः । यादः जलजन्तुः ॥ "इन्धेर्नलोपश्च" इति च । एधः इन्धनम् ॥

---

१. G घिच.

॥ ६४३ ॥ पातेर्बले जुट् च ॥ ४—२१० ॥

पाजः बलम् ॥

---

॥ ६४४ ॥ उदके थुट् च ॥ ४—२११ ॥

पाति जन्तून् पाथः ॥

---

॥ ६४५ ॥ अन्ने च ॥ ४—२१२ ॥

पाथः अन्नम् ॥

---

॥ ६४६ ॥ [1]अदेर्नुं धश्च ॥ ४—२१३ ॥

अदेरन्नेऽर्थे नुम् धश्च । अद्यते अन्धः ॥ "अदेर्नुं धश्च वा" इति भोजः । अदस्शब्दः ॥

---

॥ ६४७ ॥ स्कन्देश्च स्वाङ्गे ॥ ४—२१४ ॥

असुन् धश्च । स्कन्धः भुजशिरः । अदन्तः स्कन्धः वक्ष्यते ॥

---

॥ ६४८ ॥ आपः कर्माख्यायां ह्रस्वश्च नुट् च वा ॥ ४—२१५ ॥

अप्नः अपश्च कर्म ॥

---

॥ ६४९ ॥ रूपे जुट् च ॥ ४—२१६ ॥

आपेः रूपेऽर्थेऽसुन् ह्रस्वो जुट् च । अब्जः रूपम् ॥

---

॥ ६५० ॥ उदके नुं भश्च ॥ ४—२१७ ॥

आपेः उदकेऽर्थेऽसुन् ह्रस्वो नुम्, पस्य भश्च । आप्यते सर्वैः अम्भः ॥

---

॥ ६५१ ॥ नहेर्दिवि भश्च ॥ ४—२१८ ॥

नह्यते संबध्यते सर्ववस्तुभिः नभः ॥

---

1. GD omits 646—648.

॥ ६५२ ॥ इण आगोऽपराधे ॥ ४—२१९ ॥

असुन्नागादेशश्च । गच्छति प्रसादनेन आगः ॥

॥ ६५३ ॥ अमेर्हुक् च ॥ ४—२२० ॥

अमति रुजति अंहः ॥

॥ ६५४ ॥ रमेश्च ॥ ४—२२१ ॥

असुन् हुक् च । रमन्तेऽनेन शूराः रंहः ॥

॥ ६५५ ॥ [1]देशे ह्रश्च ॥ ४—२२२ ॥

मस्य हः । रमन्तेऽत्र रहः ॥

॥ ६५६ ॥ अञ्च्यञ्जियुजिभ्रस्जां कुश्च ॥ ४—२२३ ॥

अञ्च्यते ज्ञायतेऽनेनेति अङ्कः चिह्नम् ॥ अङ्गः अशक्तः ॥ य्योगः मनः ॥ भृज्जति तपति भर्गः तेजः ॥

॥ ६५७ ॥ भूरञ्जिमिथितॄपॄभ्यः कित् ॥ ४—२२४ ॥

भुवः आकाशः ॥ रज्यति रूषयति रजः ॥ मिथः ॥ तिरः ॥ पुरः ॥ त्रीण्यव्ययानि ॥

॥ ६५८ ॥ वसेर्णित् ॥ ४—२२५ ॥

वस्तेऽनेन वासः ॥

॥ ६५९ ॥ चन्देरादेश्च छः ॥ ४—२२६ ॥

चन्दति आह्लादयति वैदिकान् छन्दः ॥

---

1. G omits this sūtra and the commentary thereon.

2. P -ह्र च.

॥ ६६० ॥ पचिवचिभ्यां सुट् च ॥ ४—२२७ ॥

कुत्वषत्वे । पक्षः मासार्धम् ॥ वक्षः ॥

॥ ६६१ ॥ वहिहाधाभ्यश्छन्दसि ॥ ४—२२८ ॥

एभ्योऽसुन् तस्य सुट् च । "हो ढः" "षढोः कः" वक्षाः अनड्वान् ॥ हासाः कालः ॥ धासाः पुरुषः ॥

॥ ६६२ ॥ इण आसिः ॥ ४—२२९ ॥

आयाः उदकम् ॥

॥ ६६३ ॥ मिथुनेऽसिः पुर्ववच्च सर्वम् ॥ ४—२३० ॥

पुंस्त्रीलिङ्गयोः धात्वोः असिः स्यात् न त्वसुन् । असुन्वच्च युडादिकार्यं स्यात् । यशाः ओजाः ॥

एवं व्याख्या क्वचिद्वृत्तौ यश आद्याश्च पुंस्त्रियोः ।
न दृष्टा इति भीतिर्नः को वा शब्दान्तमीक्षते ॥

॥ ६६४ ॥ नञ्याहन एह च ॥ ४—२३१ ॥

नञ्पूर्वस्याहनेरसिः सोपसर्गस्य धातोः एहादेशश्च स्यात् । न आहन्ति गतो न पुनरागच्छति ईति[1] अनेहाः कालः ॥

॥ ६६५ ॥ विधाञो वेध च ॥ ४—२३२ ॥

विधाञोऽसिः वेधादेशश्च । विदधाति विश्वं वेधाः ॥

॥ ६६६ ॥ नुवो धुट् च ॥ ४—२३३ ॥

गुणः । नौति नोधा ऋषिः ॥

---

1. G and A omit. इति.

## ॥ ६६७ ॥ गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च ॥ ४—२३४ ॥

गतिकारकपूर्वस्यापि धातोरसिः, पूर्वपदप्रकृतिस्वरत्वं च स्यात् । कृदुत्तरपदप्रकृतिस्वरापवादः । सुयशाः । देवयशाः ॥

## ॥ ६६८ ॥ चन्द्रे मो डिच्च ॥ ४—२३५ ॥

चन्द्रपूर्वस्य माधातोः असिः स्यात् डिच्च[1] । **चन्द्रमाः** ॥

स्वरः पूर्वपदोक्तः स्यात् चन्द्रोऽन्तोदात्त एव हि ।
आह्लादकः सन्मिमीते कालं [तस्मात्तु][2] चन्द्रमाः ॥

## ॥ ६६९ ॥ वयसि धाञः ॥ ४—२३६ ॥

**वयोधाः** अन्नम् ॥

## ॥ ६७० ॥ पयसि च ॥ ४—२३७ ॥

**पयोधाः** मेघः ॥

## ॥ ६७१ ॥ पुरसि च ॥ ४—२३८ ॥

पुरो निधीयते कार्येषु **पुरोधाः** पुरोहितः ॥ रेतसि च भोजः । रेतोधाः पिता ॥

## ॥ ६७२ ॥ पुरूरवाः ॥ ४—२३९ ॥

पुरु प्रभूतं रूयते धीयते सर्वैरिति **पुरूरवाः** ।

## ॥ ६७३ ॥ चक्षेर्बहुलं शिच्च ॥ ४—२४० ॥

शित्त्वात् ख्याञभावः । **चक्षः** चक्षुः । नृनन्तु सर्वत्र पश्यति **नृचक्षाः** राक्षसः । बहुलोक्तेः सर्वेषूपपदेषु न ॥

---

१. G डित्
२. The word within brackets is omitted in all the mss.

॥ ६७४ ॥ **उषः कित्** ॥ ४—२४१ ॥

ओषति दीप्यते **उषः** ॥

॥ ६७५ ॥ **दमेरूनसिः** ॥ ४—२४२ ॥

**दमूनाः** उपशान्तः । "दमेरुनसिः" इति भोजः । **दमुनाः** अग्निः ॥

॥ ६७६ ॥ **अङ्गिरा अप्सराः** ॥ ४—२४३ ॥

अस्यन्तावेतौ । अङ्गति जानाति धर्मं **अङ्गिराः** ॥ अद्भयो निस्सृतवत्यः **अप्सरसः** ॥

॥ ६७७ ॥ **ऊधः** ॥ ४—२४४ ॥

वहति क्षीरं ऊधः ॥ भोजोक्तास्तु—रीयते क्षीयते रेपः पापम् ॥ विजहीते व्याप्नोति विहायः, रूपस्पर्शादीन् विजहाति वा ॥ ओकः गृहम् ॥ सुतरां काङ्क्ष्यन्ते सुमनसः पुष्पाणि ॥ पुरुदंसा इन्द्रः ॥

॥ ६७८ ॥ **विदिभुजिभ्यां विश्वे** ॥ ४—२४५ ॥

आभ्यां विश्व उपपदेऽसिः स्यात् । **विश्ववेदाः** अग्निः ॥ **विश्वभोजाः** लोकपालः ॥

॥ ६७९ ॥ **वशेः कनसिः** ॥ ४—२४६ ॥

कित्त्वात् ग्रहिज्यादिना प्रसारणम् । इच्छति दैत्यहितं **उशना** ॥

इत्युणादिवृत्तौ प्रक्रियासर्वस्वे

चतुर्थः पादः ।



---

G **विश्वदेवाः**

## ॥ अथ पञ्चमः पादः ॥

---

### ॥ ६८० ॥ अदि भुवो डुतच् ॥ ५—१ ॥

अदित्याश्चर्येऽर्थेऽव्ययम् । आश्चर्यं भवतीति अद्भुतम् ॥

---

### ॥ ६८१ ॥ गुधेरूमः ॥ ५—२ ॥

परिवेष्ट्यते[1] वृतिभिः गोधूमः[2] ॥

---

### ॥ ६८२ ॥ मसेरूरन् ॥ ५—३ ॥

पाकेऽन्यथा परिणमति मसूरः धान्यभेदः ॥

---

### ॥ ६८३ ॥ स्थः किच्च ॥ ५—४ ॥

कित्त्वादाल्लोपः । स्थूरः अश्वादिपृष्ठम्[3] ॥

---

### ॥ ६८४ ॥ पातेर्डतिः[4] ॥ ५—५ ॥

पतिः । इदं माग्युक्तेः हेयम् ॥

---

### ॥ ६८५ ॥ वातेर्नित् ॥ ५—६ ॥

डतिः नित् स्यात्[5] । वतिः[6] वायुः ॥

---

### ॥ ६८६ ॥ तृहेः क्नो[7] हलोपश्च ॥ ५—७ ॥

कित्त्वादगुणः । तृह्यते हिंस्यते पशुभिः तृणम् ॥

---

१. G परिष्यते.

२. G -मम्.

३. G पृष्ठः

४. G पातेरतिः

५. G तर्नि स्यात्.

६. G वाति.

७. A कनक् P कनुन्.

॥ ६८७ ॥ वृञ्लु[1]टितनिते[2]डितण्डिभ्य[3] उलच् ॥ ५—८ ॥

बरुलं वरेण्यम् ॥ लोटुलं न ज्ञातम् ॥ तनुलं मृदु ॥ तैं[4]डुलमपि न ज्ञातम् ॥ तण्डुलं[5] पूर्वमुक्तत्वात् हेयम् ॥

---

॥ ६८८ ॥ हृषिमङ्गिशङ्किच[6]टिवन्दि[7]भ्यश्च ॥ ५—९ ॥

---

॥ ६८९ ॥ कुमुलतुमुलमुकुलमञ्जुलादयश्च ॥ ५—१० ॥

---

॥ ६९० ॥ उत्तुरुधादयश्च ॥ ५—११ ॥

---

॥ ६९१ ॥ क[8]टिपटिमदिलविललिकल्यनिरटिलटितॄभ्यो हल्[9] च ॥ ५—१२ ॥

---

॥ ६९२ ॥ पुं[10]लेः किच्च ॥ ५—१३ ॥

---

॥ ६९३ ॥ रुं[11]लादिभ्यः कित् ॥ ५—१४ ॥

एतानि षट्सूत्राणि व्याख्यासु न दृष्टानि ॥

---

॥ ६९४ ॥ दंसेष्टटनौ न आ च ॥ ५—१५ ॥

दंसेष्टटनौ स्तो नस्य आत्वं च । तत्तकुरु इति भाष्यते[12] दासः । टटनो स्वरभेदः । टित्त्वात् ङीप् । दासी ॥

---

1. G लुति.
2. G and GD omit तडि.
3. G adds तण्डश्च.
4. G तण्डुलं.
5. G, P and GD तण्डुकः
6. G कति.
7. G वदि.
8. G तटि.
9. G टल्.
10. G पुरेः
11. G and GD कुक्का-
12. G भाष्ये.

॥ ६९५ ॥ दंशेश्च ॥ ५—१६ ॥

टटनौ नस्यात्वं च । दशति मत्स्यादीन् दाशः ॥

॥ ६९६ ॥ सौ रमेः क्तः ॥ ५—१७ ॥

कित्त्वादनुनासिकलोपः । सुरतम् । निष्ठया [1]सिद्धेऽपि नामत्वादुक्तिरिति मन्यते ॥

॥ ६९७ ॥ दमेः पूर्वपदस्य च दीर्घः ॥ ५—१८ ॥

दमे द्योत्ये सुपूर्वस्य रमेः क्तः, सोर्दीर्घश्च । सुतरां रमयति सूरतः शान्तः ॥

॥ ६९८ ॥ पूञो यत् णुड्ढ्रस्वश्च ॥ ५—१९ ॥

पूञो यत्[3] स्यात्, तस्य णुट्[2], धातोः ह्रस्वश्च । पुनाति पुण्यम् ॥

॥ ६९९ ॥ स्रंसेः शिः कुट् किच्च ॥ ५—२० ॥

स्रंसेः यत् कित् स्यात् । तस्य कुट्, धातोः श्यादेशश्च । लम्बते शिक्यम् ॥

॥ ७०० ॥ अर्तेः क्युनुच्च ॥ ५—२१ ॥

रपर उत् । तस्य पूर्वस्य योरनः । उरणः मेषः ॥

॥ ७०१ ॥ हिंसेरीरन्नीरचौ ॥ ५—२२ ॥

हिंसीरः व्याघ्रः । स्वरे भेदः ॥

---

१. GD omits सिद्धे.

२. G णुक.

३. G उत्.

४ G क्युरुच्च.

॥ ७०२ ॥ उदि दृणातेरलचौ पूर्वपदान्त्यलोपश्च ॥ ५—२३ ॥

उत्पूर्वस्य [1]दृधातोः अल् अच् इति स्तः । उदो दकारलोपश्च । गुणः । उदीर्यते सरन्ध्रं भवति इति उदरम् । अलचोः स्वरभेदः ॥

---

॥ ७०३ ॥ डित् खनेर्मुट्[2] चोदात्तः ॥ ५—२४ ॥

खनेर्डितावलचौ स्तः । धातोः उदात्तो मुट् च । डित्त्वात् टिलोपः । मुखम् ॥

---

॥ ७०४ ॥ हन्तेश्च द्वे ॥ ५—२५ ॥

हनेरलजौ द्वित्वं च । आहन्यते जघनम् ॥

---

॥ ७०५ ॥ अमेरसच्[5] ॥ ५—२६ ॥

अमसः व्याधिः । स्वरभेदात् पुनरुक्तिः ॥

---

॥ ७०६ ॥ मुहेः खो[6] मूर् च ॥ ५—२७ ॥

मुहेः खः स्यात्, मूर् इत्यादेशश्च । मुह्यति मूर्खः ॥

---

॥ ७०७ ॥ नहेर्हलोपश्च ॥ ५—२८ ॥

नह्यतेऽङ्गुलिषु नखः ॥

---

॥ ७०८ ॥ महेश्च ॥ ५—२९ ॥

मह्यन्तेऽत्र देवाः मखः[7] ॥

---

१. G -जलौ.
२. A and GD -दान्त-
३. G omits the root.
४. G रुट् च स चोदात्तः
५. G अमेः सच्.
६. A and GD ख.
७. G महः

## ॥ ७०९ ॥ शीङो नित् ह्रस्वश्च ॥ ५—३० ॥

शिरसि शेते शिखा ॥

---

## ॥ ७१० ॥ शाखा ॥ ५—३१ ॥

श्यतेः निपात्यते । वृक्षांशत्वेन तनुत्वात् शाखा ॥

---

## ॥ ७११ ॥ माङ उखः ॥ ५—३२ ॥

माङो धातोः खान्त[1] उखाशब्दः । [2]मितःपार्श्येऽस्मिन् पार्श्वं उखा[3] ॥

---

## ॥ ७१२ ॥ [4]कलेः फगस्योच्च ॥ ५—३३ ॥

कलेः फक् अत उत्वं च । कुल्फः गुल्फः ॥

---

## ॥ ७१३ ॥ गलेश्च ॥ ५—३४ ॥

"गल अदने" अद्यते तिरोधीयते पादे गुल्फः, गूढगुल्फत्वस्य गुणत्वात् । "शिफाशफकफादयः" इति भोजः । श्यतेः इत्वमत्वं च । तनुत्वात् शिफा वृक्षजटा ॥ तनूकरोति भुवं शफः खुरः ॥ रुद्धकण्ठः कायन्त्यनेन कफः ॥

---

## ॥ ७१४ ॥ स्पृशेश्वण्[5]शुनौ पृ च ॥ ५—३५ ॥

स्पृशेः [6]श्वण्शुनौ प्रत्ययौ, पृ इति सर्वादेशश्च । णित्त्वात्[7] वृद्धिः । पार्श्वं गुणः ॥ पर्शुः पार्श्वास्थि ॥

---

1. G ऊखो मयच्.
2. G पान्त.
3. G निखा.
4. G कुलिगलिभ्यां.
5. A omits शुनौ पृ च.
6. A शुन्. G शुनौ.
7. G णित्वे.

॥ ७१५ ॥ श्मनि श्रयतेर्डुन् ॥ ५—३६ ॥

श्मन्युपपदे[1] श्रीञो डुन् । श्मश्रु ॥

॥ ७१६ ॥ अश्र्वादयश्च ॥ ५—३७ ॥

अश्नुते व्याप्नोति नेत्रम् अश्रु । अस्यते मृज्यते अस्तु तदेव ॥

॥ ७१७ ॥ जनेष्टन् नलोपश्च ॥ ५—३८ ॥

जन्यते जटा ॥

॥ ७१८ ॥ अच्[2] तस्य च जङ्घ च ॥ ५—३९ ॥

तस्य जनेः जङ्घ इत्यादेशः, अप्रत्ययश्च स्यात्, जङ्घा ॥

॥ ७१९ ॥ लूञो मनिन् ॥ ५—४० ॥

लोम[3] । प्राङ्निपातितत्वात् इदं हेयम् ॥

॥ ७२० ॥ क्लिशेरन् लोलोपश्च[4] ॥ ५—४१ ॥

क्लिश्यतेऽनेन केशः ॥

॥ ७२१ ॥ हन्तेः शरीरावयवे द्वे च ॥ ५—४२ ॥

अप्[5] च स्यात् । जघनम् । प्रागुक्तेः हेयम् ॥

॥ ७२२ ॥ फलेरितजादेश्च पः ॥ ५—४३ ॥

पलितम्[6] । एतच्च हेयम् ॥

---

1. G omits श्मनि........डुन्.
2. GD omits अच्.
3. A and G omit लोम.
4. A ललोप-
5. G अवच्.
6. G and GD पलितः

## ॥ ७२३ ॥ कृञादिभ्यः संज्ञायां वुन् ॥ ५—४४ ॥

क्रियते करकः ॥ दरकः सुवर्णकारः ॥ पिटकः पात्रभेदः । बदरपिटकेति[1] भाष्योक्तेः न गुणः । अत्र भोजः—"कृसृभृवृस्तुकुक्षुचरिचटिचणितम्यवि-देविकनिमनिपचिमचिमशिक्षारिकुरिवृतिवल्लिनल्लितल्यलिभ्यो[2] वुन्"। सरकः मद्यभेदः ॥ भरकः गोण्यादिः ॥ वरकः वाजसनेयभेदः ॥ स्तूयते स्तबकः ॥ स्थाधातोः प्रागुक्तः ॥ कवकः अभक्ष्यद्रव्यभेदः ॥ क्षपकः राजसर्षपः ॥ चरकः मुनिः ॥ चटकः पक्षी ॥ चणकः मुनिः ॥ तमकः व्याधिः[3] ॥ अवकः ॥ देवकः राजा ॥ दीप्यते कनकम् ॥ नशिमन्योरेत्वं वाच्यम् । मेनका । नशे स्त्वनेशदित्युक्तम् ॥ पेचकः हस्तिजघनम् ॥ मेचकः वर्णभेदः ॥ "मनिपचि-मचां नाम्नि" इति भोजोक्तेरेत्वम् । मशशब्दे मशकः ॥ क्षारकः बालमुकुलम् ॥ "कुर शब्दे" ध्वनन्त्यत्र भृङ्गाः कोरकः प्रौढमुकुलम् ॥ वर्तिका प्रागुक्ता ॥ संव्रियते[4] भस्त्रया वल्लकी ॥ धारयन्त्यन्नादि मल्लकः शरावः ॥ सल्लकी वृक्षः ॥ भूषयति मुखं अलकः ॥ "कौरुरुण्डिरण्डिभ्यः" कुवन्त्यत्र[5] भृङ्गाः कुरवकः । कुरव इत्यपि दृष्टम् ॥ कुरुण्डकः[6] पर्णगुच्छः । कुरण्डकः[7] स एव ॥ "कुटेः नुं च वा" आवृणोति वृक्षं प्रकोष्ठं च कण्टकः कटक इति ॥

---

## ॥ ७२४ ॥ जनेरष्ठश्च[8] ॥ ५—४५ ॥

ठोऽन्तादेशः । जायतेऽस्मात् जठरम् ॥

---

## ॥ ७२५ ॥ पचिर्वदिभ्यां इच्च ॥ ५—४६ ॥

---

१. G विटकेति.
२. G -किभ्यो.
३. G मुखव्याधिः
४. G संप्रीयते.
५. G कुप-
६. कुरुण्टकः
७. कुरण्टकः
८. A ठ च.
९. G मनि.

अत इत्वम्, अन्त्यस्य ठैश्च। पचन्त्यस्मिन् पिठरः ॥ वदत्यबद्धं विठरः मूर्खः ॥

॥ ७२६ ॥ वचिमनिभ्यां चिद्वा ॥ ५—४७ ॥

आभ्यामरश्चिद्वा स्यात्, ठत्वं च। वठ[1]: मूर्खः। मठरः ज्ञानी ॥

॥ ७२७ ॥ ऊर्जिदृणातेरलचौ पूर्वपदान्तलोपश्च ॥ ५—४८ ॥

ऊर्जशब्दपूर्वात् दृणातेः अल् अच् इति स्तः[2]। ऊर्जो जलोपश्च। ऊर्दरः कुसूलः[3]। अलचः स्वरे भेदः। आद्युदात्तस्तु दृष्टः ॥

॥ ७२८ ॥ कुदरादयश्च ॥ ५—४९ ॥

कुदरः हिंस्रः ॥ मृश्रोः[4] दुक् श्रोः ह्रस्वश्च। मृदरः[5] मृत्युः ॥ शृदरः सर्पः ॥ श्रो गुणे रस्य बः। शृणाति शबरः ॥ "बद स्थैर्ये" बदरः ॥

॥ ७२९ ॥ हन्तेर्युजाद्यन्तयोः घत्वतत्वे च ॥ ५—५० ॥

घतनः बह्वाशी ॥

॥ ७३० ॥ क्नगिमिक्षमिभ्यस्तुन् वृद्धिश्च ॥ ५—५१ ॥

क्नान्तुः प्रैषणिकः ॥ गान्तुः पथिकः ॥ क्षान्तुः पिता ॥

॥ ७३१ ॥ [7]गृहेः कन् ॥ ५—५२ ॥

कित्त्वादगुणः। गूहति स्वतेजसा शत्रून्[8] गुहः स्कन्दः ॥

---

१. G omits ठः
२. G adds स्यात्
३. G omits ऊर्जो......कुसूलः
४. A मिश्रोः
५. G मुदरो
६. G आद्यन्त-
७. G गुहेः
८. GD omits शत्रून्.

॥ ७३२ ॥ करोतेः द्वे च ॥ ५—५३ ॥

[1]चक्रम् ॥

॥ ७३३ ॥ विषेर्व्याप्तिकर्मणि ॥ ५—५४ ॥

व्याप्तिक्रियार्थात् विषेः किन् । देहं व्याप्नोति विषम् ॥

॥ ७३४ ॥ हर्यतेः कन्यन् हिर् च ॥ ५—५५ ॥

"हर्य गतौ" सर्वत्र व्याप्नोति उपयाति द्रवति वा हिरण्यम् ॥

॥ ७३५ ॥ कृञः पासञ् ॥ ५—५६ ॥

कार्पासः । "कृञः पांसः" इति कार्पासो वृक्ष इति केचित् ॥

॥ ७३६ ॥ [4]कठिचकिभ्यामोरः ॥ ५—५७ ॥

कठोरः[5] ॥ चकोरः । पूर्वं चिदुक्तः ॥

॥ ७३७ ॥ [6]जनेस्तो रश्च ॥ ५—५८ ॥

अन्त्यस्य रत्वम् । जर्तः योनिः । जीर्यतेः तनि प्रागुक्तः ॥

॥ ७३८ ॥ डोऽट् च ॥ ५—५९ ॥

जनेर्डःस्यात्, अडागमश्च । जायत इति अजः[7] छागः ॥

॥ ७३९ ॥ ऊर्णोतेः डः ॥ ५—६० ॥

ऊर्णा छागादिलोम ॥

---

१. G चक्रम्.

२. G व्याप्तिः

३. G क्रियत्वात्

४. G कचेकिभ्या-

५. G omits this word.

६. G जनेस्तु

७. A and G cmit अजः

॥ ७४० ॥ दधातेर्यन्नुट् च ॥ ५—६१ ॥

धार्यते पोष्यते वा धान्यम् ॥

॥ ७४१ ॥ जीर्यतेः क्रिन् रश्च वः ॥ ५—६२ ॥

जृधातोः क्रिन्, ऋत इत्वे कृते [१]रस्य वत्वं च स्यात्। जिव्रिः कालः। अत्र वान्तस्य "हलि च" इति दीर्घो बाहुलकान्न[२] स्यात् ॥

॥ ७४२ ॥ ऋजेः कीकन् ॥ ५—६३ ॥

ऋजीकः ऋषिः ॥

॥ ७४३ ॥ अर्भकपृथुकपाका वयसि ॥ ५—६४ ॥

एते वयसि निपात्यन्ते। अर्हति लालनं अर्भकः[३] ॥ प्रथते वर्धते पृथुकः ॥ रक्ष्यते पाकः। पाकस्यार्थभेदादुक्तिः[४] ॥

॥ ७४४ ॥ अवद्यावमावर्वरेफाः कुत्सिते ॥ ५—६५ ॥

[[६]अवद्यम् ॥ अवमम् ॥ अर्वा ॥ रेफः ॥]

॥ ७४५ ॥ चतेरुरन् ॥ ५—६६ ॥

अकार उक्त्यर्थः। चतुरश[७] दः ॥

वाद्धारावति रेफान्तौ भोजेनात्र निपातितौ।
सहेः क्विप् च षषादेशोऽप्युक्तः [८]षट्शब्दसिद्धये ॥

॥ ७४६ ॥ लीङ्रीङो ह्रस्वश्च[९] पुक्तरौ श्लेषमकु-त्सनयोः ॥ ५—६७ ॥

---

१. G रस्वत्त्वं
२. G -कं न
३. G मदकः
४. G दुक्तिः
५. G adds माद्य
६. The words within brackets are ommitted in all the mss.
७. GD शतुःशब्दः
८. G षन् छन्दसिद्धये
९. G omits ह्रस्वश्च

[1]लीङ्रीङोः क्रमादर्थद्वये तर इति प्रत्ययौ ह्रस्वः पुक् च स्युः । लिप्रं श्लेष्मा ॥ रिप्रं कुत्सितम् ॥

॥ ७४७ ॥ क्लिशेरीचोपधायाः कन् लोपश्च लो नाम् च[3] ॥ ५—६८ ॥

क्लिशेः कन्नुपधायाः स्यादीत्वम् [4] लस्य च लुप् ततः ।
नामागमश्च मध्ये स्यात् कीनाशः क्लेशनात् यमः ॥

॥ ७४८ ॥ अश्नोतेराशुकर्मणि वरट् च ॥ ५—६९ ॥

अश्नोतेराशुत्वे द्योत्ये वरट्, उपधाया ईत्वं च । आशु स्वचिन्तितार्थं [5]प्राप्नोति ईश्वरः । टित्त्वात् ईश्वरी ॥

॥ ७४९ ॥ आप्नोतेः क्विप् ह्रस्वश्च ॥ ५—७० ॥

अप्शब्दः ॥

॥ ७५० ॥ अपिसर्तेरसिन् ॥ ५—७१ ॥

अप्सराः । [7]पूर्वं अस्यन्त इति भेद ॥

॥ ७५१ ॥ सिचेः संज्ञायां कन् नुंहौ च ॥ ५—७२ ॥

सिचेः नाम्नि कन् स्यात् नुमागमोऽन्त्यस्य हश्च । सिञ्चति रुधिरेणाङ्गं भुवं वा सिंहः ॥

॥ ७५२ ॥ व्याङि घ्रातेश्च जातौ ॥ ५—७३ ॥

कनः कित्त्वादाल्लोपः । भक्ष्यान्वेषणार्थं व्याजिघ्रति व्याघ्रः ॥

---

१. A and GD add पुक्तरौ श्लेष्मकुत्सनयोः । लीङ्रीङोः
२. G and GD रीचो-
३. A omits च.
४. G यस्य
५. G omits प्राप्नोति.
६. G क्विप्ह्रस्वश्च.
७. G मूकमस्यते.
८. G अस्य ह्रस्वश्च

॥ ७५३ ॥ छापूखडिभ्यो गक् ॥ ५—७४ ॥

छिद्यते यज्ञे छागः ॥ पुनात्यास्यं पूगः ॥ "खड भेदने" खड्गः ॥

॥ ७५४ ॥ हन्तेरः घुर् च ॥ ५—७५ ॥

[1]हन्तेरप्रत्ययो घुर् इत्यादेशश्च स्यात् । घोरः ॥

॥ ७५५ ॥ गृहेरणिः ॥ ५—७६ ॥

न गृह्यते रसोऽनया ग्रहणिः व्याधिः ॥

॥ ७५६ ॥ तनोतेः डउः सन्वच्च ॥ ५—७७ ॥

सन्वत्वात् तितन् इति स्थिते टिलोपः । विस्तीर्णत्वात् तितउ शूर्पः । डउः इत्युक्तिसामर्थ्यात् न सन्धिः ॥

॥ ७५७ ॥ प्रथेरमच् ॥ ५—७८ ॥

अन्येभ्योऽधिकं [2]प्रख्यायते प्रथमः ॥

॥ ७५८ ॥ चरेश्च ॥ ५—७९ ॥

[3]अन्ते चरति चरमः ॥

॥ ७५९ ॥ पुरश्च ॥ ५—८० ॥

पृधातोरप्यमच् । पालयत्यन्यान् पूरयति वाभीष्टं परमः ॥

॥ ७६० ॥ अर्तेर्भुक्षिनक् ॥ ५—८१ ॥

अलावितौ । ऋभुक्षिशब्दः इन्द्राख्यः ॥

---

१. A घुरच्प्रत्ययो.

२. G प्रथते.

३. GD omits अन्ते.

॥ ७६१ ॥ मङ्घेरञ् लोपश्च ॥ ५—८२ ॥

मघा नक्षत्रम् ॥

॥ ७६२ ॥ खनेर्डलः ॥ ५—८३ ॥

खनति तुदति खलः ॥

॥ ७६३ ॥ गवि गन् धृञो[1] वः ॥ ५—८४ ॥

[2]गोपूर्वाद्धृञो वः स्यात्, गोश्च गन्भावः। गवि स्वर्गे [3]ध्रियतेऽवतिष्ठते गन्धर्वः। गवि गानरूपायां वाचि तिष्ठति वा। भुवि तिष्ठतीत्यश्वोऽपि ॥

॥ ७६४ ॥ दम्भेस्सिन् मक् च ॥ ५—८५ ॥

धातोर्मगादेशः। दभ्नाति हिनस्त्यङ्गं मक्षिका ॥

॥ ७६५ ॥ दमेरुभिदुगुश्चोपधायाः ॥ ५—८६ ॥

दमयति रिपून् दुन्दुभिः ॥

॥ ७६६ ॥ दिवेर्डिवः ॥ ५—८७ ॥

डित्त्वाट्टिलोपः। इकार इत्। दिव्शब्दः ॥

॥ ७६७ ॥ मङ्गेरलच् ॥ ५—८८ ॥

प्राप्यते सुखमनेन मङ्गलम् ॥

इत्युणादिवृत्तौ प्रक्रियासर्वस्वे

॥ पञ्चमः पादः ॥



1. A and G. गधृञो. 3. G म्रियते.
2. G गोपूर्वस्य.

## अथ वर्णानीतिः

अथ वर्णा आनीयन्ते—

### अवतेर्विड्लोपो दीर्घश्च वा ॥ १ ॥

विटः सर्वलोपे[1] धातोर्वलोपे[2] च कृते दीर्घविकल्पात् अ आ इति सिद्धम् ॥ अवति विश्वं अः विष्णुः ॥

---

### इष्युषिभ्यां क्विब्व्यञ्जनलोपश्च ॥ २ ॥

दीर्घश्च वा स्यात् । कित्त्वादगुणः । इ ई उ ऊ ॥ इच्छन्त्यनेन इः[3] कामः ॥ ओषति दहति विश्वं उः शिवः ॥

---

### अर्तिकिरत्योः कलोपश्च ॥ ३ ॥

[4]अनेकयाः [5]क्विप् कॄधातोः कलोपश्च । ऋ ॠ ॥ क्विपः[6] पित्त्वेऽपि बाहुलकादॄधातोः[7] न तुक् । अर्यते गम्यते देवैः ऋॠशब्दोदितौ ॥

---

### तयोरेव लृ ॥ ४ ॥

तयोः ऋ ॠ इत्यनयोः लत्वं च स्यात् । आन्तरतम्यादेकद्विमात्रौ । [8]लृ ॡ । लवर्णस्य दीर्घाभावो लिपिपाठादन्यत्रेत्यत्रेदं प्रमाणम् ॥

---

### इणो गुणवृद्धी ॥ ५ ॥

ए ऐ ॥

---

### ऊहेर्व्यञ्जनलोपश्च ॥ ६ ॥

गुणवृद्धी च स्तः । ओ औ ॥

---

१. G लोपो.

२. G र्वा.

३. A omits इः.

४. A omits अनेकयाः........ पश्च.

५. G क्विकॄधातोः.

६. P omits क्विपः.

७. G and A ददधातोः.

८. G लृङ् भवर्णादीर्घ.

[1]अमेर्मुसौ च ॥ ७ ॥

अमेर्व्यञ्जनलोपो मुसौ प्रत्ययौ च स्तः । मस् इति शेषे सस्य रुत्वविसर्गौ । अं अः ॥

---

कनिखनिगमिघसिङु[2]ङ्भ्यो डः[3] ॥ ८ ॥

डित्वात् टिलोपः । क ख ग घ ङ ॥ कनति दीप्यते कः ब्रह्मादिः ॥

---

चमिछमिजन्युज्झिमिदेरुजलोपो ञ च ॥ ९ ॥

एषां डः स्यात् । [4]उज्झेरुकारजकारलोपौ मिदेर्मकारस्य[5] आदेशश्च । च छ ज ॥ उज्झेर्झकारमात्रस्य शिष्टत्वात् अजभावाट्टिलोपाप्रसङ्गः[6] । झ ॥ मिदेर्मस्य ञत्वे टिलोपे च कृते ञ ॥

---

ट्वलिठ्वलिड्वलिढौकृपणिभ्यो वपलोपश्च ॥ १० ॥

एभ्यो डो वलोपश्च । पणेः पशब्दलोपश्च स्यात् । ट ठ ड ढ ण ॥

---

तनिथुडिदमिधनिमिभ्यश्च ॥ ११ ॥

डः स्यात् । त थ द ध न ॥

---

[8]पातिफक्कतिबृहिभृमृड्भ्यश्च ॥ १२ ॥

प फ ब भ म ॥

---

१. G अमेम्मुसौ.
२. G and A ङुङ्.
३. G ढः.
४. G ऊर्झेः.
५. G नकारस्य.
६. G प्रसङ्गः.
७. G ङिव.
A टङिव-.
८. G and A कति.

यातिरातिलातिवातिभ्यश्च ॥ १३ ॥

य र ल व ॥

---

शमिमुषिसहाभ्यो मुलोपश्च ॥ १४ ॥

एभ्यो डो मुषेर्मुलोपश्च । श ष स ह ॥

---

कायतिपिबत्योः ᳵकᳶपौ च ॥ १५ ॥

अनयोर्डः । एतावादेशौ च स्तः । ᳵक[1] ᳶप ॥

॥ इति वर्णानीतिः ॥



---

1. G omits ᳵ क ᳶ प.

[1]उक्तेषु प्रत्ययेष्वेव[2] प्रकृत्याधिक्यगोचराः ।
भोजोक्तयः पुरा प्रोक्ताः अवशिष्टानथ ब्रुवे ॥

"कायः किः" काकिः स्वरदोषः ॥ "[3]वर्धेरकिः" [4]छिनत्ति वर्धकि. तक्षा ॥ "कौतेर्डिखिः" किखिः शिशुः क्रोष्टा । दीर्घान्त इति हरः ॥ "श्रिञो ढिः[5]" गुणः । श्रेढिः गणितव्यवहारः ॥ "चमेरुच्चार्तिः[6]" चुण्ढिः क्षुद्रवापी ॥ "मुषेः कित्[7] उनट् च" [8]मुषेः ढिः कित्स्यात् उनडागमश्च । "मुष खण्डने" मुषुण्ढिः आयुधम् ॥ "वस्यर्तिभ्यामातिः" वसातयः जनपदः ॥ अभिगच्छति अभिगम्यते वा युद्धेषु अरातिः ॥ "अभौ यामाभ्याम्" अभियातिः अभिमातिश्च शत्रुः ॥ मातेरपि । [9]गच्छति वृत्त्या । प्राग्वदर्थः ॥ "यजो यश्च" यजति देवान् ययातिः ॥ "तनेर्डिथिः" [10]प्रतिपक्षं तायते तिथिः ॥ "उषेरधिः" गुणः । उष्यते आतपैः ओषधिः ॥ "विदेः किद्रट् च" ज्ञायते विचार्यते वा वैद्यैः विद्रधिः व्याधिः[11] ॥ "वल्यर्तिकृतिभ्यो रिः" संवृणोति तरुं [12]वल्लरिः लता ॥ [13]अररिः कवाटम् ॥ कर्तरीः खण्डनी ॥ "धूञ्मूमाङ्शालिभ्यो लिग्लिणौकुलिञ्मलिच्" धूञो लिक् । धूयते वातेन धूलिः ॥ मूञो लिण् । बध्यते मौलीः ॥ माङ औकुलिच् । मौकुलिः काकः ॥ शालेर्मलिच् । शाल्मलिः वृक्षः ॥ "गोपादिष्वनेरसिः" गोपानसिः वलभी ॥ एकानसिः उज्जयिनी ॥ वाराणसिः काशिः ॥ अतः "पूर्वपदात्संज्ञायाम्" इति णः । अस्य णत्त्वस्यासिद्धत्वात् चित्तानसिः जलचरः ॥ "व्रियो ह्रिक्" "व्री वरणे" आव्रियते वृतिभिः याच्यते व्रीहिः ॥ "शलेरङ्कुः" शलङ्कुः मुनिः ॥ "शलेराटुच्" शलाटुः कोमकफलम् ॥

---

१. G adds रूढः
२. G ष्वयं
३. G कर्धतेरकिः.
४. G omits छिनत्ति.
५. A and P डिः.
६. G चाठः.
७. G नित्.
८. G omits मुषेः डिः कित्.
९. G गतिप्रीत्या.
१०. G omits the commentary.
११. G omits व्याधिः.
१२. G वल्लतिः.
१३. A अरतिः.

"तनिमनिकणिभ्यो डुः" तण्डुः नन्दीश्वरः ॥ मण्डुः मुनिः ॥ कण्डुः वेदना ॥ "पनेर्दीर्घश्च" स्तूयते पाण्डुः ॥ "मृपल्योः कनुगानुकौ च" आभ्यां डुः एतावागमौ च स्तः । मृकण्डुः मुनिः ॥ पलण्डुः लशुनम् ॥ "गमेः कित्" कित्त्वात् "अनुदात्तोपदेश" इति मलोपः । गच्छति चिकित्सया गडुः ॥ "यमेर्दुक्" प्राग्वन्मलोपः । यच्छति रिपून् यदुः ॥ "धुञो नुट् च" धुन्धुः असुरः ॥ "जीवेरदानुक्" अस्यादानुक् । जीरदानुः पर्जन्यः ॥ "अभ्रेरमुः" सम्यगभ्रति अभ्रमुः दिक्करिणी ॥ "कर्केरारुः" कर्कारुः कूश्माण्डः ॥ "ओर्वैरादेरुदेतौ च" उर्वारुः ऐर्वारुः[1] द्वौ चिर्भिटीभेदौ ॥ "तुम्बेरुरुः" "तुम्बि अदर्शने" सञ्चारशीलत्वात् कापि न चिरं दृश्यते तुम्बुरुः ॥ "कैन्देरत[2] उच्च" कन्दुरुः सल्लकीनिर्यासः ॥ "चमेरूरुः" चमति तृणादि चमूरुः मृगः ॥ "शीङ्पीङ्शलिभ्यो लुलुगालुचः" एभ्यः क्रमात् लुः लुक् आलुच् इति स्युः । शेलुः पीलुश्च वृक्षभेदौ ॥ शलालुः गन्धद्रव्यम् ॥ "कमण्डलुगृहलुगुलुगुलवः" केन जलेन मण्डयते कमण्डलुः ॥ गृहलुः मुनिः ॥ "गुड रक्षणे" रक्षति वातात् गुलुगुलुः ॥ "तरतेरक्षुः" तरति लङ्घयति पैशुं[3] तरक्षुः व्याघ्रः ॥ "प्रीकाभ्यां कैङ्गुजुगुक्तः[4]" कित्त्वादियङाल्लोपश्च । प्रियङ्गुः कङ्गुश्च धान्यभेदौ ॥ "कशेश्चिपुगुक्तः[5]" प्राप्यते कशिपुः ॥ "तुवः किकन्" अनावितौ । कित्त्वादगुणः । उवङ् ॥ तुविक् पुत्रः । ककारान्तोऽयम् ॥ "ईडेरीबडिह्रस्वश्च" इडबिड् विश्रवाः ॥ "भातेर्डवतुः" अनेन सर्वादिगतभवच्छब्दः[6] ॥ "उदके श्वयतेर्डितिः" संज्ञात्वादुदकस्योदादेशः । उदकेन वर्धते उदश्वित् तक्रम् ॥ "पातेः कुथिः" कित्त्वादाल्लोपः । पृथिति थान्तः । पुथु नृपाख्या ॥ "ककुप्त्रिष्टुबनुष्टुभः" एते भान्ताः ॥ "अनसि वहेः क्विब् डश्चानसः" अनसोऽन्त्यस्य डित्त्वम् । क्विपः कित्त्वाद्वहेः प्रसारणम् । अनडुह्शब्दः ॥ "क्रोकोरो लैश्च[7] वा" कृधातोरङ्कप्रत्ययो गुणे कृतेरस्यलत्वं च स्यात् । विक्षिप्यन्ते वस्तून्यस्मिन् करङ्कः ॥ समुद्रः कीर्यते वस्त्रादौ कलङ्कः ॥

---

१. G omits एवारुः.
२. G कनेस्त.
३. G तरुं.
४. A कङ्गुजूक्तः.
५. A चिपूक्तः.
६. G च्छन्दः.
७. G लोश्च.
A लपश्च.

"शालापाकाभ्यः कित्" कित्त्वादालोपः। रान्त्यस्मै दयालव इति रङ्कः अशक्तः ॥ आदीयते राक्षसैः लङ्कः ॥ पायति शुष्यत्यातपेन पङ्कः ॥ ध्वनति कङ्कः ॥ "कलेरविङ्कः" कलविङ्कः पक्षी ॥ "क्रमेरेलकः" क्रमेलकैः करभः ॥ "कनेरीनकः" शोभते कैनीनिका तारका ॥ "हृरुहिपिण्डिभ्य ईतकः" हरीतकः रोहीतकः पिण्डीतकश्च वृक्षाः ॥ "कुषेः कित्" कुषीतकः ऋषिः ॥ "चण्डिभल्लिभ्यामातकः" चण्डातकं नर्तक्यादिवासः ॥ भल्लातकः वृक्षः ॥ "श्लेष्मातकाम्रातकाम्लातकपिष्टातकादयः" पिष्टातकः पटवासः। अन्ये वृक्षाः। "पिष्टातकः" इत्येवामरः। आयुक्तेः कोशातक्यादि ॥ "जनेर्घः" इत्यधिकृत्य—"दृणातेः कित्" "ऋृत इत्" "हलि च" इति दीर्घः। दीर्घः ॥ "सर्तेरघच्" सरघा मधुमक्षिका ॥ "उचेश्चक्" उच्चः ॥ "कवेरचच्" कव्यते ³ग्रथ्यते कवचम् ॥ "क्रमेः कच् मस्य कैः" क्रामति वृक्षोदरं क्रकचः ॥ "मृङ उचच्" म्रियते व्यथतेऽनेन मरिचम् ॥ "नमेर्डीचच्" नीचः ॥ "लिषिलप्योरुचर्श्च" षस्य कः। लिकुचः लकुचश्च वृक्षः ॥ "गुडेरूचच्" रक्षति रोगेभ्यो गुडूची अमृता ॥ "चिम्योर्डोचच्" चीयते वर्धते चोचः पनसः ॥ मीयते प्रक्षिप्यते भूमौ मोचा रम्भा ॥ "ञ्चच" चिम्योः ञ्चच् स्यात्। चञ्चा तृणपुरुषः ॥ मञ्चः ॥ "वियो जक्" जायतेऽस्मात् बीजम् ॥ "पुवो नुग्घ्रस्वश्च" पुञ्जः ॥ "कुवो बुक् च वा" कुधातोः जक्प्रत्ययः नुक् च बुक् च स्यात्। कुवन्ति पक्षिणोऽत्र कुञ्जः ॥ कूयते सर्वैः परिहस्य कथ्यते कुब्जः ॥ "कुलेरिजक्" संस्त्यायति व्रीह्याद्यत्र कुलिजम् मानम् ॥ "कृञोऽञ्जक्" करञ्जः तरुः। रलयोरभेदात् कलञ्जः ॥ "मुर्वेरजग्लोपश्च" वस्य लोपः। बध्यते चर्मणा मुरजः ॥ "कुटजोटचवलजबल्वजादयः" कुटजः तरुः ॥ वटयते वेष्ट्यते पर्णैः उटजः ॥ गच्छन्त्यनेन वलजं द्वारम् ॥ बलेर्बुक्। बल्वजाः काशाः ॥ "झमेर्झः" "झमु

१. G omits क्रमेलकः.
२. G कनीकिमी कान्वारका
३. G ग्राहयते.
४. G मकः.
५. G डीयच्.
६. G रुकतश्च.
P रुचकच.
७. P मोचा चोरम्भा.
८. G and P omits स्यात्.
९. G कुलिजः.
१०. G adds च.

अदने" झमति उष्णं झञ्झः सशीकरो मेघवातः ॥ "किरतेराट[1]ल्लश्च वा" विक्रयति क्रय्याणि[2] किराटः वणिक् ॥ किलाटः वृक्षभेदः ॥ "शृङ्गाटकवाट-ललाटविराटप्र[3]पुन्नाटादयः" शृङ्गाटः चतुष्पथः ॥ कपेर्वश्च । कवाटम् ॥ शोभते ललाटम् ॥ प्रपुन्नाटः उद्भिद्भेदः ॥ "चिरेरि[4]टच् भश्च" "चिरि हिंसायाम्" द्व्यज्धातुः । [5]अन्त्यस्येकारस्य भत्वम् । चिर्भिटी लताभेदः ॥ "डिण्ट[6]न्" चिरेः डिण्ट[7]न्प्रत्ययः स्यात् । डित्त्वादन्त्येकारलोपः । हिनस्ति [8]मृद्नाति युवानं चिर[9]ण्टी प्रौढा[10] । "वयसि प्रथमे" इति ङीप् । चिर[11]ण्डीति तु दृश्यते ॥ "खञ्जेररीटः" खञ्जरीटः पक्षी ॥ "वृणातेरुटच्" वरुटः अन्त्यजातिः ॥ "नर्कुटमुकुटकुक्कुटादयः" नृत्यति नर्कुटः वन्दी ॥ आमुच्यते शिरसि मुकुट किरीटः ॥ आदत्ते भक्ष्यं कौति वा कुक्कुटः । आद्युक्तेः मकुटस्थपुटादिकम् ॥ "बन्धेः कूटन्" कित्त्वान्नलोपः । बध्नाति हृदयं वे[12]धूटी युवतिः । प्राग्वत् ङीप् ॥ "दरिद्रो दुर् च" दुर्युपपदे द्रणातेः कूटन् दुरादेशश्च स्यात्। दुर्दुरूटः दुर्मुखः । दुरि [13]दुलेः कुटनि रलयोरभेदात् रत्वे दुर्दुरुटः इति हरः ॥ "चपेरेटच्" चपेटः चपेटा वा हस्ततलम् ॥ "ग्रो णित्" गोरटः मुनिः ॥ "करोतेराटच्" करोटं भाजनभेदः ॥ "बकोटाक्षोट[14]कर्कोटादयः" क्रमात् बकवृक्षनागाः ॥ आद्युक्तेः शाकोटः तरुः[15] ॥ "लगिग्रोरुडच्" लगति हस्ते लगुडः यष्टिः ॥ गिरति सर्पान् गरुडः ॥ "व्याडनीडक्रोडकहो-डादयः" व्ययति सुखं व्याडः दुश्शीलः ॥ नितरामीयते खगैः नीडम् ॥ कीर्यते हारायत्र क्रोडा बाहुमध्यम् । विक्षिपति भुवमिति वराहोऽपि ॥ अन्त्य ऋषिः ॥ "इण्शोवेणिभ्यो ण उक्तः" एति वनेषु एणः ॥ तनूकरोति शाणः ॥

---

१. G टल्लल्लोपश्च
२. G वक्ष्य-
   P भक्ष्यः
३. G. प्रपुन्नाट-
४. G निटच्.
५. G and A अन्त्यत्वात्
६. G डिण्डन्
७. G डिण्डन्.
८. G omits मृद्नाति
९. G चिरण्डी.
१०. P omits प्रौढा.
११. A, P and GD चिरण्टी.
१२. G वधूः तटी
१३. G कुलेः
१४. G omits -क्षोट...यष्टिः in the commentary on the next sūtra.
१५. A omits तरुः

कृष्णवेण्णा नदी ॥ "हूणभ्रूणक्षूणघृणादयश्च" ह्वयति हूणः म्लेच्छः ॥ भ्रियते भ्रूणः गर्भः ॥ क्षूयते उद्धोष्यते क्षूणः अपराधः ॥ क्षरत्यार्द्रीभवत्यनया हृदयं घृणा ॥ आद्युक्तेः मसृणघुसृणादिः ॥ "अङ्गितङ्गिकङ्किमङ्गिकृपिवृषिभ्यो णक्" अङ्गन्त्यत्र अङ्गणम् अजिरम् ॥ तङ्गणः जनपदः ॥ चलति हस्ते कङ्कणः ॥ मङ्गणः ऋषिः ॥ "कृप कृपायाम्" कृपाविषयः कृपणः ॥ वृषणः ॥ "कृकण-कुङ्कणत्रपणोल्बणवङ्क्षणादयश्च" कृकणः मुनिः ॥ कुङ्कणः जनपदः ॥ त्रपणः देशः ॥ वलेर्वस्योत्वं बुक् च । उल्बणमिति लकारमाह नाथः । "उत्पूर्वात् बणेरच्" इति तकारमाह माधवः ॥ वञ्च्यते छाद्यते वङ्क्षणः ऊरुमूलसन्धिः ॥ आद्युक्तेः ज्योतिरिङ्गणः । खुङ्खणः हरखट्वाङ्गः ॥ "कृपिविषिभ्यामाणक्" कल्पते शक्नोति[4] हन्तुं कृपाणः ॥ विषाणः ॥ "पर्याणकल्याणादयश्च" पर्येति पृष्ठं पर्याणः अश्वादिकुथः ॥ कलयति सुखं कल्याणम् ॥ आद्युक्तेः द्रेक्खा-णादि ॥ "गादाभ्यामेष्णक्" रौत्रिगेष्णः रङ्गोपजीवी ॥ सुगेष्णा किन्नरी ॥ चारुदेष्णः सात्यभामेयः ॥ सुदेष्णा विराटपत्नी ॥ "[6]ह्रिञ ईतङ्" हारीतः पक्षी ॥ "शकेरुन्तः" इत्यधिकृत्य—"कषेर्डित्" कषति हिनस्ति कुन्तः ॥ "कलिमलिभ्यामूतक्" कुलूतः जनपदः ॥ मयूता वसतिः ॥ "कम्पेरोतो नलोपश्च" वनेषु चरति कपोतः ॥ "आङि स्फायेर्डित्" आस्फोता ओषधिः ॥ "ककिमकिभ्यामन्दन्" ककन्दः मकन्दश्च राजा ॥ "मुचेर्डकुन्दकुकुन्दौ" मुञ्चन्ति संसारात् मुकुन्दः ॥ मुचुकुन्दः नृपः ॥ "यमेरुन्दन्" यमुन्दः क्षत्रियः ॥ "ककेरुन्दन् णिच्च वा" लोलति ककुदः स्कन्धपिण्डम् ॥ काकुदं तालु ॥ "अर्तिबुदोर्बुक् च" अर्बुदं संख्या ॥ बुद्बुदम् ॥ "स्कन्दियमिभ्यां धः" स्कन्धः ॥ अन्धः । सान्तौ पूर्वमुक्तौ ॥ "कुञोऽन्धच्" कबन्धः नौः ॥ "नौ स्यतेरधक्" कित्त्वादाल्लोपः । "उपसर्गात् सुनोति" इति स्यतेः षः । निषधः ॥ "मङ्केर्नलोपश्च" मगधः ॥

---

१. G omits कृष्ण
२. G omits अङ्गि......अजिरम्.
३. P घुङ्खणः
४. G हन्तुं शक्तः
५. G गतिगेष्णः
६. G हृतङ् ह्रीतङ्.
७. G -मनि-
८. G मुचेर्डुकुन्द-
९. P कुञो.

"इषेरुधक्" इषुधः याच्ञा ॥ "खलेरीनः" संचीयते संकोच्य गृह्यते खलीनं प्रग्रहः ॥ "पठेर्णित्" पठ्यते यादः सुपाठीनः मत्स्यः ॥ "अडेरुप-[1]गुच्चोपधायाः" उद्यच्छतेऽनेन तरितुम्[2] उडुपः प्लवः ॥ "अशेरूपच्" अश्यते[3] अपूपः ॥ नितरां कुरति शब्दायते निकुरुम्बः ॥ अनृजु भवत्यनेन मनः[4] कुटुम्बः दारादिः ॥ "टिकेष्टः तुट् च ॥ कस्य टत्वं तुट् ष्टुत्वम् । टिट्टिभः पक्षी ॥ "ककेरुभः" ककुभः तरुः ॥ "कुकेः कक् च" कुक्कुभः पक्षी ॥ "दमेर्दो डुः डुक् च[5]" दमेर्दस्य डुत्वमुभप्रत्ययः तस्य डुक् च स्यात् । डुण्डुभः ॥ "क उम्भक्" जलपूरणावस्थायां शब्दायते कुम्भः ॥ "कुथेरुमक्" "कुथ पूतीभावे" कुथुमं मृगाजिनम् ॥ "कुदकुकोर्नु च" कुन्दुमः निचयः ॥ आदीयते कुङ्कुमः ॥ "कषिकुलिलुलिकलिभ्य आयक्" कषति पीडयति कषायः रसभेदः, वैपरीत्यात् सुगन्धश्च ॥ संस्त्यायन्ति पक्षिणोऽत्र कुलायः ॥ लुलति लुठति पङ्के लुलायः महिषः ॥ क्षिपन्त्यन्त्यवर्णान्[6] कलायः ॥ "कौतेरियः[7]" कवियं खलीनम् ॥ "क्रूञः कित्" कित्त्वादगुणे यण् । क्रियः मेषः ॥ "वियस्तुट् च" वियो आलीयर्[8] तस्य तुट् च । वृद्धिः । वेतालीयं वृत्तम् ॥ "वचेरथ्यक् तश्च" कित्त्वादुत्वम् । चस्य तत्वम् । उतथ्यः ऋषिः । तत्वं विनैव दृश्यते ॥ "अनिकाभ्यः तरन्" अन्तरम् ॥ कायति[9] रोदिति कातरः ॥ "इणपूभ्यां कित्" इतरः ॥ पूतरः जलजन्तुः ॥ "कलेबरः" कल्यते [10]बध्यते सिराभिः कलेबरम् ॥ "[11]मिञः खलच्च" मिञः खलच्प्रत्ययः कलश्च स्यात् । "मीनातिमिनोति" इत्यात्वबाधार्थं एत्वं च स्यात् । प्रक्षिप्यते जघने मेखलः नर्मदाप्रभवोऽद्रिः ॥ "श्रो नुं ह्रस्वश्च" शृणाति पीडयति बद्धं[12] शृङ्खला ॥ "कुडिकितिपणिवेलृपल्लिवल्लिमालिभ्यो वक्" कुडवः मानम् ॥

---

१. A and P अटे-
२. G उद्यते नेन तेरितुं
३. G and A अश्ये.
४. G and A omit मनः
५. G मदेर्दो डुक् च
   A ददेर्दो दाडुक् च.
६. A क्षिपत्य-
७. A -यन्.
८. G नालीभर्
९. G गायति.
१०. G omits this word.
११. G omits this sūtra.
१२. G बन्धं.

निवसत्यत्र[1] चञ्चलं कितवः ॥ स्तुत्या शब्दमात्रलक्षणात् पणवः ॥ “पेलृ गतौ” हृदयङ्गमत्वात् पेलवः मृदुः ॥ पल्लवः ॥ “वल वल्ल संवरणे संचरणे च” गोरक्षणार्थं सञ्चरति वल्लवः ॥ मालवाः ॥ “कैरवभैरवकारण्डवादीनवादयः” बिभेत्यस्मात् भैरवः ॥ दीयते क्षीयते आदीनवः दोषः ॥ आद्युक्तेः कोद्रवबाडवादयः ॥ “श्रृणातेरावः” शीर्यते शरावः ॥ “कलेरशच्[2]” बध्यते मृदा कलशः ॥ “पलेराशच्” प्राप्यते समिदर्थैः पलाशः ॥ “कुणिकुलिवलिबन्धिभ्यः किशच्” ध्वनन्ति [3]शुकादयोऽत्र कणिशं सस्यमञ्जरी ॥ कुलति मज्जति[4] रिपोरङ्गे कुलिशम् ॥ वलिशं मृगव्यापादनस्थानम् ॥ बलिशम् ॥ तिनिशः वृक्षः ॥ इतिशः ऋषिः ॥ बालिशः मूर्खः ॥ “अङ्किमस्जिभ्यामुशच्” अङ्कयति पदं करोति गजकर्णे अङ्कुशः ॥ मज्जति बिले मञ्जूशः नकुलः ॥ “कलेर्मषक्[5]” क्षिप्यते कल्मषम् ॥ “कुलेश्च माषक्” कलेः कुलेश्च माषक् । [6]संस्त्यायति कुल्माषः अर्धखिन्नमाषादिः ॥ बहुवर्णैः संबध्यते कल्माषः नानावर्णः ॥ “जलेरार्षः” जलाषः जलम् ॥ “पीङो नसक्” पीनसः श्लेष्मव्याधिः ॥ “कृपियुवलिभ्य आसः” कार्पासः पित्तप्रकृतिः ॥ युवासः दुरालभः ॥ वलासः श्लेष्मा ॥ “किलेः कित्” किलश्चेत्येके । किलासं सिध्मम् ॥ “कुरः पासः” “हलि च” इति दीर्घः । कूर्पासः ॥ “पटिवीभ्यां टितुडिसचौ[9]” पटति गच्छति रिपून् पट्टिसं आयुधम् ॥ वीयते खाद्यते हंसैः बिसम् ॥ “तालेरीसच्” तालीसं[10]ः गन्धद्रव्यम् ॥ “त्रपेरुसः” कर्कटिका । उसेति विधानसामर्थ्यात् न षः ॥ “अलेरम्बुसः” अलम्बुसः राक्षसः ॥ “लुञो हः” खण्ड्यते लोहः ॥ “अनेरोकहः[11]” अनोकहः वृक्षः ॥ “कटेराहः” वृष्यते सिञ्च्यते जलमस्मिन् कटाहः ॥ “निरीण ऊहक्” निर्गच्छति बहिः निर्यूहः ॥

---

१. G वसन्त्यत्र.
२. G शरच्.
३. G मृगादयोऽत्र.
४. P निमज्जति
५. G omits this sūtra.
६. G omits कुलः......जलम्.
७. A omits this word.
८. A omits this sūtra.
९. G टिसन्धीसचौ,
A टिषण्डिसचौ
१०. G and P तालीसम्.
११. A -हा.

" दस्यूह: " दत्यूह: पक्षी ॥ " वलेरक्षन् " संवृणोति वर्णान्तरं व्याप्नोति वा वलक्ष: धवल: ॥ " लाक्षाद्राक्षामिक्षादय: " लान्त्येनां लाक्षा ॥ द्रवति मध्वस्मात् द्राक्षा ॥ आमिक्षा हविर्भेद: । आयुक्ते: पीयुक्ष: वृक्ष: ॥

॥ इति भोजोक्ता: ॥

[1]नान्तं प्रापदुणादिशास्त्रमियता शब्दाननुक्तानतो
धातुप्रत्ययरूपत: प्रविभजेत् कार्यात् किदादीन् वदेत् ।
रूढा: साधव एव ते च शकटापत्यादिभिर्धातुजा:
सर्वेऽपीत्युदितं ततो बहुलमित्यूचे स्वयं पाणिनि: ॥

उणादिवृत्तित्रितयं दण्डनाथकृतिं तथा ।
दृष्ट्वैतत्कृतमस्माभि: देवनारायणाज्ञया ॥

इति श्रीमत्केरलभूवलयभूषणदेवनारायणधरणीपतिकरुणाशरणेन
नारायणचरणपरायणेन नारायणकविना
विरचिते प्रक्रियासर्वस्वे
उणादिखण्ड: समाप्त: ॥



1. G omits this verse.

# INDEX OF WORKS & AUTHORS REFERRED TO

# INDEX OF SŪTRAS

# INDEX OF QUOTATIONS

| | | | |
|---|---|---|---|
| अलिशालि | १०९ | Cf. Bs. | II-i-168. |
| अलिशीङ्भ्यां | ५८ | Cf. Bs. | II-ii-207. |
| अलेरम्बुसः | १४८ | Bs. | II-iii-182. |
| अविचिण् | ९३ | | |
| अविदधि | ९५ | Cf. Bs. | II-i-177. |
| अवेश्च | ६३ | Cf. Bs. | II-i-198. |
| अवे ह्रस्वश्च | ३० | Bs. | II-ii-255. |
| अवोदै | २८ | Pā. | VI-iv-29. |
| अशिकचोः | ३९ | Bs. | II-ii-23 |
| अशेरूपच् | १४७ | Bs. | II-ii-216. |
| अश्नोतेः | १०३ | Bs. | II-ii-51. |
| असेश्च | १६ | Cf. Bs. | II-i-58. |
| आङि च | ८५ | Bs. | II-i-287. |
| आङि स्फायेः | १४६ | Bs. | II-ii-150. |
| आतो युक् | १ | Pā. | VIII-iii-33. |
| आद्गुणः | ५७, १०३ | Pā. | VI-i-87. |
| आपो ह्रस्वश्च | ५० | Bs. | II-i-141. |
| आश्वासव्यः | ११ | Mahābhāṣya | I-250. |
| इणोदम् | २७ | Bs. | II-i-298. |
| इण्पूभ्यां | १४७ | Bs. | II-iii-67. |
| इण्शी | १४५ | Cf. Bs. | II-ii-122. |
| इन्धेः | १२० | Bs. | II-i-340. |
| इषेरुधक् | १४७ | Bs. | II-ii-177. |
| इस्मन्त्र | ५२, ११२, ११४ | Pā. | VI-iv-97. |
| ईडेः | १४३ | Bs. | II-i-256. |
| ईरिव्या | २८ | Cf. Bs. | II-ii-250. |
| उच्चेः | १४४ | Bs. | II-ii-74. |
| उत्पूर्वात् | १४६ | Mādhava | |
| उदोष्ठ्य | ६, ४७, ८९, ९६, १११ | Pā. | VII-i-102. |
| उदके | १४३ | Bs. | II-i-263. |
| उपधायां | ३२ | Pā. | VIII-ii-78. |
| उपह्वर | ५५ | Cf. Bs. | II-iii-74. |
| उपधायां च | ७० | Pā. | VIII-ii-78. |
| उपसर्गात् | १४६ | Pā. | VIII-iii-65. |

| | | | |
|---|---|---|---|
| उभे च | १११ | Bs. | II-i-154. |
| उर्दः | ३२ | Bs. | II-iii-125. |
| उल्बणम् | १४६ | Daṇḍanātha Nārāyaṇa on Bs. | II-ii-126. |
| उषेः | १४२ | Bs. | II-i-205. |
| उषेर्नक् | ८९ | Bs. | II-iii-162. |
| ऋकम् | २४ | Bs. | II-iii-100. |
| ऋक्षेरो | ८ | Bs. | II-i-26. |
| ऋजनोः | २२ | Bs. | II-iii-95. |
| ऋत इत् | ३५, ४७, ६६, ९३, १११, ११२, ११८, १४४ | Pā. | VII-i-100. |
| क उम्भक् | १४७ | Bs. | II-ii-238. |
| ककिमकि | १४६ | Bs. | II-ii-167. |
| ककुप् | १४३ | Bs. | II-i-299. |
| ककेरुन्दन् | १४६ | Bs. | II-ii-171. |
| ककेरुभः | १४७ | Bs. | II-ii-235. |
| कच्छगुलुच्छ | १०३ | Bs. | II-ii-85. |
| कच्छब्दे | ९ | Cf. Bs. | II-i-35. |
| कटिबिदि | ४ | Cf. Bs. | II-i-10. |
| कटेराहः | १४८ | Bs. | II-iii-187. |
| कणिकुलि | १४८ | Bs. | II-iii-146. |
| कणिजलि | ९१ | Bs. | II-ii-27. |
| कनेः | २४४ | Bs. | II-ii-36. |
| कन्देश्च | १७ | Cf. Bs. | II-i-109. |
| कन्देः | १४३ | Bs. | II-i-103. |
| कमण्डलु | १४३ | Bs. | II-i-106. |
| कमितमि | २५ | Bs. | II-ii-66. |
| कमितिभ्योः | ३९ | Bs. | II-ii-22. |
| कमेश्च | ७ | Cf. Bs. | II-i-85. |
| कमेः क्रम च | ३९ | Bs. | II-ii-25. |
| कम्पेरोतो | १४६ | Bs. | II-ii-149. |
| कम्पेर्न | ६८ | Bs. | II-iii-102. |
| कराग्रं | ८५ | Cf. śveta Uṇ. | IV-4. |
| करोतेरोटच् | २४६ | Bs. | II-ii-111. |
| कर्केः | १४३ | Bs. | II-i-100. |
| कर्मणां विनुते | ११२ | Ṭikāsarvasvam | |

| | | | |
|---|---|---|---|
| कलिपलि | १०५ | Cf. Bs. | II-iii-1. |
| कलिस्फुलि | २५ | Bs. | II-ii-63. |
| कलेरशच् | १४८ | Bs. | II-iii-142. |
| कलेर | १४४ | Bs. | II-ii-32. |
| कलेरेवरः | २४७ | Bs. | II-iii-75. |
| कलेर्मषक् | १४६ | Bs. | II-iii-152. |
| कल्पि | ९६ | Cf. Bs. | II-iii-164. |
| कविरसरिर | १२ | Cf. Bs. | II-iii-47. |
| कवेः | १४४ | Bs. | II-ii-75. |
| कशेः | १४३ | Cf. Bs. | II-i-84. |
| कषिकुलि | १४७ | Bs. | II-iii-8. |
| कषेर्डित् | १४६ | Bs. | II-ii-147. |
| कायः | १४२ | Bs. | II-i-173. |
| कार्यं कारुः | १ | Bhaṭṭi Kāvya | VII-28. |
| किणिबिलि | ३० | Cf. Bs. | II-iii-129. |
| किरतेरा | १४५ | Bs. | II-ii-99. |
| किरतेश्च | ५९ | Cf. Bs. | II-ii-208. |
| किलेः कित् | १४८ | Bs. | II-iii-177. |
| किसलय | १०१ | Bs. | II-iii-7. |
| कीकट | ९७ | Bs. | II-ii-98. |
| कीचक | ४१ | Cf. Bs. | II-ii-11. |
| कीलाल | ६८ | Bs. | II-iii-105. |
| कुकूल | ९९ | Cf. Bs. | II-iii-112. |
| कुकेः कक | १४७ | Bs. | II-ii-236. |
| कुक्ष्यन्त्र | ११५ | Bhāgavata | |
| कुगुध्वञ्चि | २३ | Bs. | II-iii-98. |
| कुङ्गो | ११८ | Bs. | II-i-187. |
| कुचिञोः | ११८ | Bs. | II-i-190. |
| कुञोऽन्धच् | १४६ | Cf. Bs. | II-ii-174. |
| कुटज | १४४ | Bs. | II-ii-92. |
| कुटेः नुं | १३२ | Bs. | II-ii-9. |
| कुडिकिति | १४७ | Bs. | II-iii-134. |
| कुडुप इति | ८० | Hara | |
| कुणेश्च | २१ | Cf. Bs. | II-ii-120. |
| कुतपचातप | ८१ | Cf. Bs. | II-ii-212. |

| | | | |
|---|---|---|---|
| चिस्योः | १४४ | Bs. | II-ii-81. |
| चिरेरिटच् | १४५ | Bs. | II-ii-101. |
| चुलुकोन्मुक | ३९ | Bs. | II-ii-26. |
| चेरुपन्योः | ६८ | Bs. | II-i-42. |
| चोः कुः | ५८, ६१, ६५, ११७ | Pā. | VIII-ii-30. |
| चौरादिकः | २० | Śveta-Uṇ. Vṛtti | I-96. |
| च्छ्वोः शूड् | २९ | Pā. | II-iv-19. |
| छशां षः | ३४, ४३, ५८, ६५, ८२ ११४ | Pā. | VIII-ii-36. |
| जनिवध्योश्च | २, १०९ | Pā. | VII-iii-35. |
| जनसनखनां | ११४ | Pā. | VI-iv-42. |
| जनिपुणि | १०५ | Cf. Bs. | II-iii-3. |
| जनेर्घः | १४४ | Bs. | II-ii-68. |
| जराजटा | २ | Bs. | II-i-4. |
| जलेराषः | १४८ | Bs. | II-iii-154. |
| जीवेः | १४३ | Bs. | II-i-81. |
| जुकिजनि | १०४ | Bs. | II-ii-95. |
| जॄकमि | २१ | Bs. | II-ii-114. |
| जॄपॄकॄ | ९७ | Cf. Bs. | II-iii-166. |
| ज्ञेश्च | ५५ | Cf. Bs. | II-ii-189. |
| ज्वरत्वर | १५, २९, ५५, ९२ | Pā. | VI-iv-20. |
| झमेः | १४४ | Bs. | II-ii-93. |
| झरो झरि | ९६ | Pā. | VIII-iv-65. |
| झोऽन्तः | ६३ | Pā. | VII-i-3 |
| टिकेष्टः | १४७ | Bs. | II-ii-234. |
| ड्वच् | १४४ | Cf. Bs. | II-ii-82. |
| ढिण्टन् | १४५ | Bs. | II-ii-102. |
| डिण्डीर | ९० | Cf. Bs. | II-iii-50. |
| डुकशि | ११८ | Cf. Bs. | II-iii-120. |
| ढ्रलोपे | ३७ | Pā. | VI-iii-111. |
| तनिमनि | १४३ | Bs. | II-i-51. |
| तनेः | १४२ | Bs. | II-i-203. |
| तमिबिडि | ६७ | Cf. Bs. | II-iii-101. |
| तमिलूभ्यां | २५ | Cf. Bs. | II-ii-59. |
| तरतेः | १११ | Bs. | II-i-158. |
| तरतेः | १४३ | Bs. | II-i-109. |

| | | | |
|---|---|---|---|
| तलिमलि | ९९ | Bs. | II-iii-58. |
| ताडेः | २० | Cf. Bs. | II-i-258. |
| ताभ्यामन्यत्र | २ | Pā. | III-iv-75. |
| तालेरीसच् | १४८ | Bs. | II-iii-180. |
| तितुत्र १५, ३४, ६१, ६५, ६६, ७०, ११४, ११७ | | Pā. | VII-ii-7. |
| तुम्बेः | १४३ | Bs. | II-i-102. |
| तुवः | १४३ | Bs. | II-i-246. |
| त्रपेरुसः | १४८ | Bs. | II-iii-181. |
| त्रश्च | ५७ | Cf. Bs. | II-ii-182. |
| त्रश्च | ७६ | Cf. Bs. | II-ii-116. |
| त्रो दुक् च | १८ | Cf. Bs. | II-i-112. |
| दमेः | १२५ | Bs. | II-i-347. |
| दमेर्दः | १४७ | Cf. Bs. | II-ii-237. |
| दरिद्रो | १४५ | Bs. | II-ii-108. |
| दस्त्यूहः | १४९ | Bs. | II-iii-189. |
| दुषेः | ७७ | Cf. Bs. | II-ii-139. |
| दृकृषि | ११८ | Bs. | II-i-189. |
| दृणातेः | १४४ | Bs. | II-ii-69. |
| दृशामि | ७४ | Cf. Bs. | II-ii-158. |
| द्युगमिभ्यां | ४५ | Bs. | II-i-150. |
| द्युतिस्वाप्योः | ४४ | Pā. | VII-iv-67. |
| द्युद्रुभ्यां | ८ | Bs. | II-i-34. |
| धातोस्तन्नि- | १०५ | Pā. | VI-i-80. |
| धुञो | १४३ | Bs. | II-i-70. |
| धूञ्मू | १४२ | Bs. | II-i-233. |
| नञि भुवो | ३१ | Bs. | II-iii-133. |
| नञि सहेः | २१ | Bs. | II-ii-121. |
| नदिवदि | ६३ | Cf. Bs. | II-i-79. |
| नमेः | १४४ | Bs. | II-ii-78. |
| नर्कुट | १४५ | Bs. | II-ii-106. |
| न लोक | १ | Pā. | II-iii-69. |
| निचुल | २० | Bs. | II-iii-110. |
| नितमेः | १०० | Cf. Bs. | II-ii-219. |
| निम्ब | १०० | Bs. | II-ii-222. |

| | | | |
|---|---|---|---|
| निय ऊनक | १०३ | Bs. | II-ii-49. |
| निरीण हऊक् | १४८ | Bs. | II-iii-188. |
| निष्कतुरुष्क | ६२ | Bs. | II-ii-6. |
| नेड्डशि | २४,, ३६ | Pā. | VII-ii-8. |
| नौ स्यतेः | १४६ | Bs. | II-ii-175. |
| यङ्क्वादीनां | ५ | Pā. | VII-iii-53. |
| पचेरिच्चोपधायाः | ७ | Bs. | II-i-22. |
| पटिनीभ्यां | १४८ | Bs. | II-iii-179. |
| पठेर्णित् | १४७ | Bs. | II-ii-198. |
| पनेः | १४३ | Bs. | II-i-52. |
| पर्याण | १४६ | Bs. | II-ii-128. |
| पलेराशच् | १४८ | Bs. | II-iii-144. |
| पातेः | २४३ | Bs. | II-i-268. |
| पादस्य पत् | १०९ | Pā. | VI-iii-52. |
| पिनाक | ८६ | Bs. | II-ii-14. |
| पिपीलिक | ४२ | Bs. | II-ii-18. |
| पिशिपृषि | ७१ | Cf. Bs. | II-ii-143. |
| पिष्टातः | १४४ | Amarakośa. | II-vi-139. |
| पीङश्च | २६ | Cf. Bs. | II-ii-57. |
| पीङो नसक् | १४८ | Bs. | II-iii-175. |
| पीङ् कुणि | १०३ | Cf. Bs. | II-ii-113. |
| पुवो नुं | १०३ | Bs. | II-ii-50. |
| पुवो | १४४ | Bs. | II-ii-87. |
| पूङश्च | १५ | Cf. Bs. | II-i-60. |
| पूङ्पीङो | १०३ | Bs. | II-ii-84. |
| पूर्वपदात् | १४२ | Pā. | VIII-iv-3. |
| पृपूभ्यां | ८१ | Bs. | II-ii-206. |
| प्रीकाभ्यां | २४३ | Cf. Bs. | II-i-48. |
| फलेः | ६४ | Bs. | II-ii-202. |
| बकोटाक्षोट | १४५ | Bs. | II-ii-112. |
| बन्धेः | १४५ | Bs. | II-ii-107. |
| बुधेश्च | ८५ | Bs. | II-i-291. |
| भञ्जेर्गश्च | १८ | Bs. | II-iii-103. |
| भविष्यति | ८५ | Pā. | III-iii-3. |
| भसेः | ११८ | Bs. | II-i-185. |

| | | | |
|---|---|---|---|
| वर्धन्तु त्वा | ३७ | Ṛg. Veda. | VII-ii-7. |
| वर्धेः | १४२ | Bs. | II-i-174. |
| वलेरक्षन् | १४९ | Bs. | II-iii-190. |
| वलेश्च | ७४ | Cf. Bs. | II-ii-135. |
| वलेः कलच् | ८५ | Bs. | II-iii-116. |
| वल्यति | १४२ | Bs. | II-i-230. |
| वसेरादि | १०५ | Daṇḍanātha on Bs. | II-iii-4. |
| वस्यति | १४२ | Bs. | II-i-195. |
| वान्तो यि | १०५ | Pā. | VI-i-79. |
| विदूर | ९९ | Bs. | II-iii-59. |
| विदिहृषि | ६ | Cf. Bs. | II-i-19. |
| विन्देः | १४२ | Bs. | II-i-206. |
| वियस्तुर् | १३७ | Bs. | II-iii-14. |
| वियो | १४४ | Bs. | II-ii-86. |
| वृकिभ्यां | ८४ | Cf. Bs. | II-iii-64. |
| वृञो | ९४ | Bs. | II-i-194. |
| वृणोतेः | १४५ | Bs. | II-ii-105. |
| वृतसु | १०१ | Bs. | II-ii-166. |
| वृमनि | ११६ | Cf. Bs. | II-iii-85. |
| वृनॄ | २५ | Cf. Bs. | II-ii-60. |
| वौ रिञ्चेः | १०७ | Bs. | II-i-160. |
| व्याडनीड | १४५ | Bs. | II-ii-119. |
| व्रातालात | ७१ | Cf. Bs. | II-ii-134. |
| व्रियो हिक् | १४२ | Bs. | II-i-241. |
| शाकादिभ्यो | १०४ | Uṇ. Sū. | IV-86. |
| शाकेरुन्तः | १४६ | Bs. | II-ii-146. |
| शलेराटुच् | १४२ | Bs. | II-i-50. |
| शलेः | १४२ | Bs. | II-i-43. |
| शंसेः | २० | Daṇḍanātha on Bs. | II-iii-110. |
| शाच्छोः | ११८ | Pā. | VII-iv-41. |
| शाशीङः | ९३ | Bs. | II-i-209. |
| शिल्पक्षुप | ५९ | Cf. Bs. | II-ii-209. |
| शिफाशाफ | १३० | Bs. | II-ii-218. |
| शिवेश्च | ६८ | Cf. Bs. | II-i-41. |

# INDEX OF WORDS



1. Words marked with asterisks are found only in the commentary.

---

# CORRIGENDA

| PAGE | LINE | READ | FOR |
|---|---|---|---|
| X | 3 | IV. 245 | IV. 246 |
| | 4 | 764 | 765 |
| | | 11 | 12 |
| XI | 1 | omit this sutra | |
| 19 | 6 | जम्बू | जभ्बू |
| 20 | 2 | -शङ्क्वु- | शङ्कय |
| | 13 | तार्टेणि | तार्टेणि |
| 36 | 8 | दहः | दह्लः |
| 38 | 8 | वीध्रम् | विध्रम् |
| 39 | 11 | -तिम्योः | -तम्योः |
| | 17 | -नशोः | नपोः |
| 41 | 4 | व्रश्चि- | वृश्चि- |
| 44 | 8 | द्युति- | द्यत्ति |
| | 9 | -स्वाप्योः | स्वप्योः |
| 62 | 6 | वल्कः | वल्क |
| 63 | 6 | -नोन्तो- | -नोम्त्यो- |
| 68 | Nos. 350 and 351 have been dropped. | | |
| 76 | 15 | जृविशि- | जविशि- |
| 79 | 9 | अगारः | अङ्गारः |
| 81 | 14 | एतशसुः | एतशसु |
| 88 | 11 | ईपेर्हस्व- | ईपेर्हस्व |
| 95 | 19 | -मुषन् | मूषन् |
| 100 | 13 | -बंन् | बुंन् |
| 100 | 18 | अमे | अम |
| 106 | 1 | No. 555 has been dropped. | |
| 107 | 11 | वौ रि- | वौ र |
| 111 | 6 | उभेः | उभे |
| | 18 | सन्वत्तु | संपत्तु- |
| 112 | 6 | कर्मणा | कर्मणां |
| 114 | 5 | ष्ट्रन् | ष्टन् |
| 117 | 6 | ड्डुंसि | ड्डुसि |
| 119 | 11 | उब्जे | अब्जे |
| | 18 | अब्जे | उब्जे |
| 131 | 11 | लो लो | लो लों |
| 132 | 14 | कटेः | कुटेः |
| 133 | 15 | गुहेः | गृहेः |
| 137 | 2 | खङ्गः | खङ्गः |
| 140 | 12 | -निनमि- | निमि- |
| 143 | 6 | जीवर- | जीर- |
| 144 | 1 | शाला- | शाला- |
| | 8 | पिष्टातकः | पिष्टातः |
| | 11 | क्रमेः | कृमेः |
| 146 | 15 | कुलिमयि | कलिमलि |
| 148 | 6 | कणि | कुणि |

# ABBREVIATIONS.

**Bs:** Bhoja's Sarasvatīkaṇṭhābharaṇa, a work on grammar. The references are to my edition of the work with the Vṛtti of Daṇḍanātha, to be published shortly.

Mahābhāṣya: The references are to the edition of Keilhorn.

Madhavīya Dhv: The Dhātu Vṛtti of Mādhava, published in the Bibliotheca Orientalia in 4 parts.

**Pā:** Pāṇini's Aṣṭādhyāyī.

Śveta Uṇ. Vṛtti: The Uṇādisūtravṛtti of Śvetavanavāsin, edited by me.